॥ श्रीशारदाम्बाचन्द्रमौलीश्वरौ विजयेतेतराम् ॥

# अथ पुरुषार्थमीमांसा ।



श्रीमत्परमहंसपरिव्राजकाचार्यादिविरु-
दावलिसहितश्रीशंकराम्नाय-
श्रीशारदापीठाधीश्वरश्री-
शङ्कराचार्यमाधवतीर्थ-
स्वामिचरणकमल-
भृङ्गायमाण-
श्रीत्रिविक्रम तीर्थ-
स्वामिचरणैर्निर्मिता ।

1920

सा च कलिकातानिवासिश्रेष्ठिप्रवर
धर्मरत्न शिवकृष्णगुप्तेन धर्मार्थ
[illegible]ीयद्रव्यव्ययेन मुद्राप्य प्रकाशिता ।

# हेतुवादः ।

अयं ग्रन्थः सरलेनपथाकारावृत्त्याव बोधाय गुरोः कर्तव्यप्रदर्शनाय चारचितो जगद्गुरुपदाधिरूढेन पश्चिमाम्नायशारदापीठाधीशेन ।

पूर्वमपूर्णोऽपि सोऽसंशोध्य मुद्रापितो बङ्गदेशे वेदान्तवाचस्पतिना रायबहादुरयदुनाथमुजुमदारेण हिन्दुपत्रिकायाम् । इदानीं संशोधितः परिपूरितश्च बीकानेरनिवासिमाहेश्वरीवैश्यज्ञातेय शिवकृष्णेनधर्मार्थं स्वद्रव्यव्ययेन पण्डितप्रवरामरचन्द्रशर्मण उपदेशेन मुद्रापितः।स्वीकृत्य चैनं पुण्यफलभागिनं श्रेष्ठिनंभवन्तो करिष्यन्ति ।

रजस्तमोरहिता विद्वांसो दृष्टिगोचरमेनं समानीय ग्रन्थं चोक्तानुक्तदुरुक्तचिन्ताफलमावेदयिष्यन्ति जगतामुपकाराय । भविष्यति परिश्रमःसफलस्तेन त्याचार्याणाम् ।

विद्वद्भिस्समादृतः सर्वैरपि स्वीकार्यो भवेदेवेति मत्वा प्रार्थयते यथायथं विबुधाग्रेसरान् सप्रणामम् ।

| | |
|---|---|
| भाद्रशुक्ला पूर्णिमा | श्रीमतामनुग्रहभाजनम् |
| | विद्यारत्न पं० |
| वि० सं० १६७७ | हरिप्रसाद शर्म्मा, |
| | अजयमेरुवास्तव्यः |

॥ श्रीशारदाम्बाचन्द्रमौलीश्वरौ विजयेतेतराम् ॥

# अथ पुरुषार्थमीमांसा ।

१ अथातः पुरुषार्थ जिज्ञासा ।

२ पुरुषार्थः सुखं नित्यं निरतिशयञ्च ।

३ अपरिच्छिन्नन्नाप्यते ।

४ अपरिच्छेद्यत्वमद्वितीयत्वात् ।

५ भूमाततः ।

६ अनुभूयते नारदादिभिः ।

७ ब्रह्मी भावश्च श्रुतेः ।

८ निर्दोषं समं च ब्रह्म ।

९ दोषः प्रज्ञापराधः ।

१० ततोऽन्तर्मालिन्यम् ।

११ द्वेधारजस्तमश्च तदल्पानल्पत्वाभ्याम् ।

१२ कामादयो रजसः उदयात् ।

१३ निद्रादयोऽन्यस्य ।

१४ ततो निकृष्टम् ।

१५ तस्यलोपः क्रमश इतराधिक्ये ।

१६ आधिक्यमेवमुचित व्यवस्थानादाहारादीनाम् ।

१७ शनैस्त्यागोऽहितस्य मात्रया ।

१८ ग्रहणं च हितस्य ।

१६ बुद्धिश्चैवं त्यागसंग्रहस्थैर्ये ।

२० एवं क्रम आभीष्टसिद्धेः ।

२१ सत्वात्तस्य च ।

२२ ज्ञानादयश्च ।

२३ तत्रापि पूर्ववद् व्यवस्था ।

२४ ऋतम्भरा ततः प्रज्ञा ।

२५ यतस्तत् प्रकाशते ।

२६ तद् विवर्धकानि,सत्कर्मध्यानस्वाध्यायादीनि ।

२७ परार्थानि स्ववर्णाश्रमोचितानि सत्कर्माणि ।

२८ ब्रह्मार्पणान्यपि ।

२६ अतः कर्मावगति रावश्यकी ।

३० देशकालादिभिः फलभेदो यतः ।

३१ अप्रमादादिनैवलाभः सर्वत्र ।

३२ धृत्यादे रपेक्षापि ।

३३ ध्यानञ्चात्मविषयं ज्ञानादनु ।

३४ आत्मा पूरुषः ।

३५ शुद्धो बुद्धो हि ।

३६ सर्वात्मविषयमपि ।

३७ स हि विराट् ।

३८ हिरण्यगर्भश्च ।

३९ ईश्वरोऽपि ।

४० आत्मानात्म सर्वात्मज्ञानापेक्षाचातः ।

४१ अनात्माप्रकृतिः ।

४२ जगच्च तद्विकारत्वात् ।

४३ चित्तवृत्ति निरोधो ज्ञानसाधनम् ।

४४ सर्वज्ञे चित्तप्रणिधानं पतञ्जलेः ।

४५ सद्भावनोपचयः कपिलस्य ।

४६ आत्मसंस्थंमनः कणादस्य ।

४७ आत्मगृहीति र्व्यासस्य ।

४८ अहिंसादयःसमुच्चिता मनोः ।

४९ तत्वस्मृतिबलमात्रेयस्य ।

५० अध्यात्मविद्युपायो गौतमस्य ।

५१ धर्मानुष्ठानं जैमिनेः ।

५२ विद्यासमुत्थानं तान्त्रिकाणाम् ।

५३ सदाचरणं बृहस्पतेः ।

५४ रत्नत्रयशरणं बौद्धानाम् ।

५५ कर्मक्षपणं वीरस्य ।

५६ सत्कर्मवाक्चिन्ता जरदुष्ट्रस्य ।

५७ नियमाधीनता मूषस्य ।

५८ बलिप्रदानं विधिनाऽसुरस्य ।

५९ भूतदया क्रीष्टस्य ।

६० गुरोराज्ञानुवर्तित्वं महामदस्य ।

६१ स्वसामर्थ्यविकाशो राहसिकानाम् ।

६२ अभ्यासवैराग्याभ्यां तत्सिद्धिः ।

६३ विवेकानन्तर्य मपेक्ष्यते च ।

६४ शमादिकमावश्यकम् ।

६५ इच्छादार्ढ्ये प्रयत्नारम्भः ।

६६ अधिमात्रस्य फलं झटिति ।

६७ तीव्रसंवेगेऽत्यासन्नं च ।

६८ दीर्घकालादि मुख्याङ्गम् ।

६९ योग्यो यत्नोऽभ्यासः ।

७० आवृत्ति श्चासकृद्यथोपदेशम् ।

७१ आसीनः सुखम् ।

७२ ध्यानाच्च ।

७३ अचलत्वापेक्षा च ।

७४ यत्रैकाग्रता हि ।

७५ आप्रायणात् ।

७६ यावता फलंवा ।

७७ तत्साधनेतरोपेक्षैव वैराग्यम् ।

७८ मैत्र्यादि तदुपकारि ।

७९ क्रियायोगोऽपि ।

८० सर्वज्ञ आगमः ।

८१ आचार्यश्च ।

८२ अनाद्यविच्छिन्नपरम्पराऽतः ।

८३ स्वाध्यायश्चागामिकोऽपि ।

८४ स्वरार्थज्ञानभावनापूर्वश्चेत्सफलः ।

८५ गुणाविर्भावः सम्यग्भावनाऽतः ।

८६ दोषतिरोभावश्च ।

८७ स्वरसाम्यवदपार्थक्यदर्शनं समत्वम् ।

८८ पार्थक्यं भेदोऽपूर्तेः ।

८९ गतिमतिकृतिप्रकृतिवैचित्र्याल्लक्ष्यते ।

९० अपूर्तिश्चावच्छेदात् ।

९१ स्वगतादिश्च ।

९२ अध्यासात् ।

९३ अज्ञानात् सः ।

९४ अविद्याचापि ।

९५ अनादिश्च वीजाङ्कुरवत् संस्कारप्रवाहात् ।

९६ ततः संसारः ।

९७ अतो दुःखमेव विवेकिनाम् ।

९८ ज्ञानात्तन्निवृत्तिः ।

९९ विद्ययालभ्यते ।

१०० ततः सुखं पूर्तेः ।

१०१ यथार्था परिपूर्तिर्ब्रह्म ।

१०२ आत्मानात्म सर्वात्मसमाहारत्वाच्च ।

१०३ जन्माद्यस्ययतश्चेति पाराशर्य्यः ।

१०४ शास्त्रयोनित्वमप्यस्य ।

१०५ सत्समाहारः साम्येनैव ।

१०६ निर्दोषत्वाच्च ।

१०७ एकोऽद्वितीयः सँश्चैव ।

१०८ तदनुभूतिरधिष्ठानव्याप्तिविज्ञानात् ।

१०९ परानन्दानुसरणात् ।

११० सदखंडानन्तैक्यबोधात् ।

१११ निष्कलत्वानुभवात् ।

११२ अनहंभावात् ।

११३ सर्वस्मिन्नहं भावात् ।

११४ सार्वात्म्यानुभूतेः ।

११५ अस्पर्शयोगादपि ।

११६ निरालम्बनाच्च ।

११७ कोशविवेकात् ।

११८ देहविचारात् ।

११९ अवस्थापरीक्षेः ।

१२० दहर विद्यादिभिर्वा ।

१२१ सर्वज्ञात्मभावात् पतञ्जलेः ।

१२२ प्रकृतिदर्शनात् कपिलस्य ।

१२३ वैदिक धर्मानुष्ठानात् कणादस्य ।

१२४ मिथ्याज्ञाननिवृत्ति रक्षपादस्य ।

१२५ यावज्जीवं धर्माचरणाद्यथाधिकारं जैमिनेः ।

१२६ सर्वमेधाद्याज्ञिकानाम् ।

१२७ सर्वसंस्कारान्ते गौतमस्य ।

१२८ सम्यग्ध्यानपरिपाकान्मनोः ।

१२९ चरमसंन्यासादात्रेयस्य ।

१३० ज्ञानकर्मभक्तिसमुच्चयाद् भागवतानाम् ।

१३१ देवताभावात् पौराणिकानाम् ।

१३२ सौरादीनाञ्चैवम् ।

१३३ विद्यासामर्थ्याद् व्यासस्य ।

१३४ वृत्तिनाशादद्वैतिनाम् ।

१३५ शेषशेषिभावाद् विष्वक्सेनस्य ।

१३६ पुष्टिपुष्टेर्वल्लभस्य ।

१३७ पराभक्तेर्गौराङ्गस्य ।

१३८ विष्णोरनुग्रहान्मध्वस्य ।

१३९ रामप्रपत्ते रामानन्दस्य ।

१४० तत्स्मरणादेव रामस्नेहिनाम् ।

१४१ गोपालाराधनान्निम्बादित्यस्य ।
१४२ ज्योतिर्दर्शनात्कबीरस्य ।
१४३ भेदपरिहाराज्ज्ञानकस्य ।
१४४ लिङ्गधृतेर्वृषभस्य ।
१४५ ध्येयाविर्भावात् स्वस्मिन् शाक्तानाम् ।
१४६ शक्तिपातादेव तान्त्रिकाणाम् ।
१४७ भैरवावेशात् षडर्धवादिनाम् ।
१४८ शरीरपातान्तेगुरोः ।
१४९ केवलज्ञानात् वीरस्य ।
१५० निर्वाणाद् बुद्धस्य ।
१५१ जगदुपकारेण वृत्तिशून्यतया च नागार्जुनस्य ।
१५२ देहलोहसिद्धिभ्यां रसवादिनाम् ।
१५३ देवतातोषादसुरस्य ।
१५४ द्योः प्रसादान्मूषस्य ।
१५५ क्रीष्टानुग्रहात् क्रीष्टीयानाम् ।
१५६ विवेकमन्वीशेश सेवया जरतुष्ट्रस्य ।
१५७ अल्लालम्बान्महामदस्य ।
१५८ अहंगृहीतेः सुफीनाम् ।

१५९ परिपूर्णभावावेशाद्राहंसिकानाम् ।

१६० सर्वभावेन शरणवरणात् सर्वात्मनः ।

१६१ अन्तर्यामिनो वा ।

१६२ आवरणनाशस्ततः ।

१६३ आवरणं ज्ञानाच्छादकम् ।

१६४ विक्षेपनाशे सत्येव ज्ञानयोगाधिकारः ।

१६५ विक्षेपो विविधवृत्युद्भवः ।

१६६ ततोदृष्टिसृष्टिः ।

१६७ सृष्टिदृष्टिर्वा ।

१६८ सैव संसारश्च ।

१६९ तदर्थमुपासनायोगः ।

१७० आराधनाभक्तियोगभेदात्त्रिधा ।

१७१ प्रथमा नाना ।

१७२ श्रौती स्मार्ती पौराणिकी तान्त्रिकी भेदात् ।

१७३ अधिकारिभेदाच्च ।

१७४ अहंप्रतीकग्रहाभ्यां श्रौती द्वेधा ।

१७५ प्रातीक्यां सिद्धायामहंग्रहाधिकारः ।

१७६ ततो विक्षेपतनुत्वम् ।

१७७ निरालम्बा स्थितिश्च ।

१७८ यथाप्रकृत्यादि प्रातीकी ।

१७९ तत्र सवितुः प्राथम्यम् ।

१८० अग्नेरपि ।

१८१ कल्पेषु विस्तरः ।

१८२ अन्तेऽग्नेः पूष्णोवा ।

१८३ सवितुर्वा ।

१८४ अन्या अपि ।

१८५ उपनिषत्सु ताः ।

१८६ स्मार्त्यामपि पूर्ववत् ।

१८७ शिवादीनां मुख्येति बौधायनः ।

१८८ तत्रापि हरहर्य्योः प्राधान्यम् ।

१८९ ग्रहादीनामपि कुत्रचित् ।

१९० पितृणाञ्च ।

१९१ तद् विस्तरो गृह्येषु ।

१९२ पौराणिकी बहुधा ।

१९३ देशजातिकुलानुरोधात् ।

१९४ क्वचित् कालबलात् ।

१९५ संसर्गात् परिस्थितेश्च ।

१९६ व्रतादिरूपा अपि ।

१९७ रीतिर्भिन्ना ।

१९८ पञ्चजनाधिकारत्वात् ।

१९९ ज्ञातव्यंतु पूर्ववदेवाऽत्र ।

२०० तान्त्रिकी पञ्चायतन प्राधान्येन ।

२०१ जैनादीनामत्र समावेशः ।

२०२ रहस्यतमेषु त्वहंग्रहस्यैवमुख्यत्वम् ।

२०३ विस्तरस्तु तन्त्ररहस्ये ।

२०४ उपास्यगुणाविर्भाव उपासके तत्फलम् ।

२०५ भक्तियोगे भावस्य प्राधान्यम् ।

२०६ इष्टे परप्रेमैव भक्तिः सर्वेषाम् ।

२०७ परानुरक्तिः शाण्डिल्यस्य ।

२०८ यतः प्रेमैव सत्कं निरुपाधिकञ्चेत् ।

२०९ अनिर्वचनीयमप्यनुभवगम्यम् ।

२१० रोमाञ्चादि सात्विकभावालिङ्गम् ।

२११ क्षेत्रशुद्धौ स्वयमुत्पद्यते ।

२१२ कपटकरहितत्वार्द्रताभ्यां शुद्धिः ।

२१३ आसुरीसम्पत् कण्टकानि ।

२१४ दैवीसम्पदात्तन्निरसनम् ।

२१५ स्वपरयोरुच्चावचभावेन ज्ञानमार्द्दता ।

२१६ स्वपरस्वरूपबोधतः ।

२१७ ततः परमस्नेहबीजं प्रकटयति ।

२१८ गुणपक्षपातोऽङ्कुर उद्भवति ।

२१९ ततो न तन्नाशः ।

२२० प्रतिबन्धाद् वृद्धिरोधः ।

२२१ न तेन रसास्वादः ।

२२२ ततोऽपर्य्याप्तिः ।

२२३ सैवार्तिः ।

२२४ ततःकृपा ।

२२५ प्रतिबन्धनिवृत्ति स्तामनु ।

२२६ शरणागतितोऽपि

२२७ तारकाद्वन्द्वासक्त्युत्कटानुरागा मुग्धमध्य-
प्रौढावस्थाभिधानाः ।

२२८ तिसृष्वदशानामन्तर्भावः

२२९ नवानामपि ।

२३० एकादशान्ताञ्च ।

२३१ भावनास्थैर्यं चिरकालीनं विप्रलम्भान्ते सिद्ध्यति ।

२३२ ततोमध्यप्रौढयोर्विप्रलम्भानुभवः ।

२३३ न स संयोगं विना ।

२३४ अतो मुग्धायां तदपेक्षा प्रकटा ।

२३५ सूक्ष्मभावेन चावस्थितिरन्यस्य ।

२३६ तेनैव तापः ।

२३७ नास्वादं विना तदुत्पत्तिः ।

२३८ तद्विना रसद्रवो नैव ।

२३९ तस्मिन् रसानुभवः प्रेम समाधिः ।

२४० रसो वा इति श्रुतेः ।

२४१ तदर्थं रसाविर्भावयोजना ।

२४२ अत्र मुख्यं साहाय्यं स्थायिभावस्य ।

२४३ सात्विकभावस्यापि ।

२४४ व्यभिचारिभावादीनां गौणम् ।

२४५ तथाप्यपेक्षातु ।

२४६ भोक्तृभोग्यौ परेशानौ केषाञ्चित् ।

२४७ अतो नायिकात्वमात्मनि राहसिकानाम् ।

२४८ नायकत्वमीशे च ।

२४९ शिष्टं रहस्यत्वज्ञात् ।

२५० द्वैतयोरद्वैतमेतदेव प्रत्यक्षम् ।

२५१ गार्हस्थ्येऽपि स्यात् ।

२५२ सगुणयोरेव ।

२५३ ततस्तस्मिन् द्वयोर्वृत्तीनामप्यैकात्म्यम् ।

२५४ अन्तः स्वभान विस्मरणमपि ।

२५५ तदा प्रियतमरूपेण जगदनुभवति ।

२५६ यतः स सर्वरूपः ।

२५७ सर्वान्तर्याम्यपि ।

२५८ तथापि साकारोऽनुभूयते ।

२५९ क्रमशः श्रद्धाग्रहाग्निर्वेदैकाश्रयैषणात्यागसमुच्चयात् धन्यः सकालो धन्या गुरुचरणपांसव इति स्वत एवोद्बोधकोऽलौकिकोऽनुभवः ।

२६० आनन्दो ब्रह्मेति श्रुतेः ।

२६१ एवं परिपाकाच्चित्तलयादीनि ।

२६२ योगश्चतुर्धा ।

२६३ राजमन्त्रहठलयभेदात् ।

२६४ राजयोगः पञ्चदशाङ्गः शंकरस्य ।

२६५ सर्वं ब्रह्मेति यमः ।

२६६ परानन्दस्मृतिर्नियमः ।

२६७ चिद्वलोकनात् रूपस्त्यागस्त्यागः ।

२६८ मनोऽगोचरध्यानं मौनम् ।

२६९ ब्रह्मव्याप्तिर्देशः ।

२७० कालाऽनवच्छिन्नत्वं कालः ।

२७१ सुखं ब्रह्मचिन्तनमासनम् ।

२७२ सर्वभूतमूलचिन्तनं मूलबन्धः

२७३ समे लयः साम्यम् ।

२७४ ब्रह्ममयदर्शनं दृष्टिः ।

२७५ ब्रह्मभावनाद् वृत्तिनिरोधः प्राणायामः ।

२७६ तदर्थं रेचकादीनि ।

२७७ प्रपञ्च निषेधोरेचकः ।

२७८ ब्रह्मास्मीति वृत्तिः पूरकः ।

२७९ तद्वृत्तिनैश्चल्यं कुम्भकः ।

२८० मनसश्चितिमज्जनं प्रत्याहारः ।

२८१ तस्य तत्रधारणाधारणा ।

२८२ ब्रह्मास्मीतिवृत्त्या निरालम्बास्थितिर्ध्यानम् ।

२८३ तस्यापि विस्मरणं समाधिः ।

२८४ अभ्यासेनैव फलयोगः ।

२८५ अननुसंधानालस्यभोगेप्सालयतमो विक्षेप-
रसास्वादशून्यतादीनि विघ्नानि ।

२८६ विक्षेपस्योपायेन शमनम् ।

२८७ लयस्य सुप्रसन्नतया ।

२८८ बोधेन वा ।

२८९ दुःखस्मृतेभोगेहा हानम् ।

२९० कषायस्य यत्नतः सम्पादनम् ।

२९१ रसास्वादे चासक्तिवर्जनम् ।

२९२ शेषेषु यथायोग्यम् ।

२९३ वैराग्यं चाभ्यासस्य सहकारि ।

२९४ सावधानताऽपेक्षा ।

२९५ तीव्रभावनया सिद्धिः ।

२९६ अनिर्वेदाच्च ।

२९७ पक्वकषायाणामेव ।

२९८ गुरुदेवभक्तानां हि ।

२९९ प्रज्ञया तेन निःसङ्गो निश्चलश्च ।

३०० तदामनोऽनिङ्गमनाभासं विक्षेपलयहीनञ्च ।

३०१ शेषमन्यत्र ।

३०२ सम्यग्ज्ञानावाप्ति रेवास्मात् ।

३०३ विधिनादीक्षितःकृतपुरश्चरणोमंत्रयोगाधिकारी

३०४ अरिषट्कजयपूर्वप्रवेशोऽस्मिन् ।

३०५ धैर्येण साकम् ।

३०६ अष्टावङ्गानि हठवत् ।

३०७ सत्याऽहिंसासमताधृत्यस्तेयक्षमार्जववैरा-
ग्यानि यमाः ।

३०८ स्वाध्यायतपोऽर्चाव्रतसन्तोषशौचा नियमाः ।

३०९ आसनान्यनेकानि ।

३१० योनिमुद्रासनंश्रेष्ठम् ।

३११ सिद्धासनमपि ।

३१२ वायुबीजेनेडया पूरकः शोषकः ।

३१३ पिङ्गलयाग्निबीजेन रेचको दाहकः ।

३१४ सुधाबीजेन पूरकादित्रयम् ।

३१५ प्राणायामः सः ।

३१६ मात्रादिकं हठवत् ।

३१७ कुस्टूयादिकमपि ।

३१८ हितमितपथ्यसात्त्विकाहारस्यकालदेशरह-स्सुपटाजिनकुशोत्तरमधिष्ठितस्य ।

३१९ चित्तात्म्यैकधृतप्राणसंहारः प्रत्याहारः ।

३२० तस्यैव स्थानस्थापनकर्म धारणा ।

३२१ अङ्गुष्ठादीनि स्थानानि ।

३२२ उत्क्रान्तिगतागतपरकायप्रवेशोपयोगीनि ।

३२३ कण्ठादिषु बीजपूर्वं भूतधारणाः ।

३२४ आत्मनः सारूप्यपूर्वं हि ।

३२५ मनसि देवताभावो ध्यानम् ।

३२६ सत्तामात्रस्थितिः समाधिः ।

३२७ कम्पपुलकानन्दवैमल्यस्थैर्यताद्यवसकलप्र-काशविस्ताः सिद्धेः सूचकाः ।

३२८ त्रैकाल्यज्ञानेहाच्छन्दतोमरद्रोधमनोज्ञाताना-डीसंक्रमणवाक्सिद्धिपरकायप्रवेशज्योतिः-प्रकाशमानि प्रत्ययाः ।

३२९ अणिमादिकं योगैश्वर्य्यम् ।

३३० कुण्डलीचालनषट्चक्रवेधाजयाजयभूतशुद्ध्यादीन्युपाङ्गानि ।

३३१ अत्रदेवतात्मगुरुयंत्रजपतामैक्यानुभवान्महाह्रदनिमज्जनं फलम् ।

३३२ मनुष्यमात्रस्यैवाधिकारो हठयोगे ।

३३३ मठवास एवात्रापेक्षितः ।

३३४ युक्ताहारविहारादयश्च ।

३३५ अत्याहारादीनि त्याज्यानि ।

३३६ उत्साहादेः कार्य्यसिद्धिः ।

३३७ अङ्गान्यष्टौ यमादीनि ।

३३८ अहिंसादयो यमा दश ।

३३९ नियमाश्च शौचादयः ।

३४० आसनानि पद्मादीनि स्थिरसुखानि बहूनि ।

३४१ मुख्यानितु सिद्धादीनि गुरुमुखैकवेद्यानि सफलानि हि ।

३४२ अभ्यास एव सिद्धिकारणं वैराग्यपूर्वश्चेत् ।

३४३ प्राणायामो बन्धत्रयपूर्वः ।

३४४ तत्रेडया पूरकः प्रथमम् ।

३४५ पिङ्गलया रेचकश्चान्ते ।

३४६ मध्ये कुम्भकेन प्राणविधारणम् ।

३४७ यथाक्रममेकद्विचतुर्गुणः कालःप्रत्येकम् ।

३४८ षोडशमात्रापूरकः प्राथमकल्पिकः ।

३४९ सुषुम्णायां प्राणस्थितिः सार्द्धद्विपलिका चेत् योग्यः ।

३५० ततो द्वादशगुणा चेत् प्रत्याहारः ।

३५१ धारणादयः क्रमेण द्वादशगुणोत्तराः ।

३५२ नाडीशुद्धा चेत्सुखेन सिद्धिः ।

३५३ तदर्थं धोत्यादीनि ।

३५४ चित्राःकुम्भकाश्चापि ।

३५५ कृशत्वादीनि सिद्धिलिङ्गानि ।

३५६ लघुत्वादीनि च श्रुतेः ।

३५७ कुण्डली चालनं चापि सिद्ध्युपयोगि ।

३५८ महामुद्रादिकं तत्राप्यपेक्षितम् ।

३५९ ततःप्रत्याहार इन्द्रियाकर्षकः ।

३६० धारणा देशबन्धश्चित्तस्य तदनु ।

३६१ प्रत्ययैकतानताध्यानं च क्रमेण तत्र ।
३६२ ततः समाधिः स्वस्वरूपस्थितिः ।
३६३ धारणाध्यानसमाधीनां एकत्रोपयोगः संयमः ।
३६४ तत्सिद्धेः काम्यसिद्धिः ।
३६५ ततस्तस्य सिद्धिषु विनियोगः ।
३६६ परं समाधावुपसर्गाः सिद्धयः ।
३६७ मोक्षप्रतिबन्धका व्युत्थापकत्वात् ।
३६८ स्वरूपप्रतिष्ठैव फलम् ।
३६९ ततः कालजयादीनि स्वयमेव ।
३७० शिष्टं योगरहस्यात् ।
३७१ राजयोगाधिकारप्राप्तिश्चाभ्यतः ।
३७२ नादानुसंधानं लययोगः ।
३७३ मन्दप्रज्ञानान्त्वत्रैवाधिकारः ।
३७४ षण्मुखीमुद्रया रहसि ।
३७५ शाम्भव्यपि स्थिराभ्यासिनाम् ।
३७६ प्रथमाभ्यासिनां त्वष्टमीहद्धिः ।
३७७ क्रमशोदशविधनादश्रवणं त्वतः ।
३७८ तत्रस्थूलं त्यक्त्वा सूक्ष्मं श्रयेत् ।

३७६ अन्तः सर्वसूक्ष्मे समाश्रिते परमानन्दः ।

३८० चित्तलयश्च ।

३८१ बाह्यशब्दाग्रहणं च ।

३८२ ततः समाधिः ।

३८३ सुकुमाराणामपि सुसुखा कर्तुम् ।

३८४ शेषं गुरुमुखैकवेद्यं हि ।

३८५ यतो न साकल्येन वक्तुं शक्यं केनचिदपि ।

३८६ यत्र कुत्रापि मनः स्पन्दरोधनमेव मुख्यम् ।

३८७ देवता प्रणिधानाच्चैतत् सकलं शीघ्रम् ।

३८८ अनुभवश्च यथाशास्त्रम् ।

३८९ मलनाशे सत्येवोपासनाधिकारः ।

३९० तदर्थं कर्मयोगः ।

३९१ अत्राधिकारभेदोऽवश्यंभावि ।

३९२ प्रकृतिवैचित्र्यात् ।

३९३ प्रकृतिर्नवधा मनोः ।

३९४ षोडशधाऽऽत्रेयस्य ।

३९५ द्विधा श्रीकृष्णस्य ।

३९६ त्रिधा कपिलस्य ।

३९७ अतोवर्णानां व्यवस्था ।

३९८ तद्योग्यताया आश्रमाणाञ्च ।

३९९ वर्णत्वाविर्जन्मना ।

४०० संभावनात् ।

४०१ आनुवंशिकानां गुणानां दर्शनात् ।

४०२ दोषाणाञ्च ।

४०३ रोगाणामपि ।

४०४ आत्रेयोऽप्येवम् ।

४०५ श्रीकृष्णश्च ।

४०६ युक्तकर्मणोद्दीप्तिस्तस्य ।

४०७ तद्विहितकरणम् ।

४०८ अविहिताकरणञ्च ।

४०९ गुणसंपदर्जनम् ।

४१० श्रुतञ्च ।

४११ समादरार्हञ्च समाहृतञ्चेत्सफलमेतत् ।

४१२ तद्विहीनस्य व्रात्यत्वम् ।

४१३ संस्कारहीनत्वादपि ।

४१४ संस्काराच्छुतेन च तस्य वर्णे प्रवेशः ।

४१५ श्रुतगुणसंपदाविहीनस्य संस्कारयुक्तस्यव-
र्णाभिधानमेव ।

४१६ नार्थकरं तत् ।

४१७ कर्मयोगादनुभूतिस्तत्साम्यस्य ।

४१८ दोषापनुत्तिश्चापि ।

४१९ वर्णाश्रमोचितं कर्मैव सः निष्कामेन चेत् ।

४२० वर्णःसमाजाङ्गभूत उपकारकश्च ।

४२१ समष्टेश्च ।

४२२ चतुर्धा पुरुषाङ्गवत ।

४२३ पञ्चधा वा श्रुतेः ।

४२४ संकराणामत्र समासः ।

४२५ वृत्तिपार्थक्यमेव ।

४२६ याजनादि ब्राह्मणस्य वृत्तिः ।

४२७ विजितादि क्षत्रियस्य ।

४२८ अभिषिक्तस्य प्रजापालनमधिकम् ।

४२९ कृष्यादि विशः ।

४३० सेवा शिल्पं च शूद्रस्य ।

४३१ मत्स्यादि निषादस्य ।

४३२ आश्रमो व्यष्टिसिद्धयै ।

४३३ व्यक्तियोग्यतैव सा ।

४३४ पुरुषावस्थाविशेषानुसारं चत्वारः ।

४३५ ब्रह्मचर्य्यगार्हस्थ्यवानप्रस्थसंन्यासा आश्रमाः ।

४३६ परः परः पूर्णोऽनुभूतेराधिक्यात् ।

४३७ शूद्रविट्क्षत्रब्राह्मणाः वर्णाः ।

४३८ परः परः श्रेष्ठः साद्गुण्यात् ।

४३९ शूद्रवर्जं द्विजा उपनयनाधिकारत्वात् ।

४४० द्विजानां चत्वार आश्रमाः ।

४४१ विशः सन्यासो नैकेषाम् ।

४४२ क्षत्रियस्य महाप्रस्थानमेवश्रुतेः ।

४४३ सदाचाराच्च ।

४४४ शूद्रस्य गार्हस्थ्यमेकमेव ।

४४५ पञ्चमहायज्ञाधिकारश्च ।

४४६ स्वजसीतायज्ञयोरपि ।

४४७ विद्यामतंसुश्रुतस्य ।

४४८ निषादस्य गार्हस्थ्यमेव ।

४४६ निषादस्थपते रौद्रेष्टेरपि ।

४५० आचार्यत्वंतुब्राह्मणस्य ।

४५१ उपदेष्टृत्वञ्च ।

४५२ प्रबन्धृत्वमपिसर्वत्र ।

४५३ व्यवस्थापकत्वं तु क्षत्रस्यैव ।

४५४ विभूतिभूतस्य क्वचिदाचार्यादित्वम् ।

४५५ शूद्रकल्पो जन्मना ।

४५६ वयोवृद्धिमनुपूर्वसंस्कारप्रादुर्भावः ।

४५७ शुभोऽशुभो वा ।

४५८ अशुभो नेष्टः ।

४५९ शास्त्रीयसंस्कारात्तन्नाशोऽपसरणं वा ।

४६० यतः शास्त्रीयस्य लौकिकात् प्राबल्यम् ।

४६१ गर्भाधानादयश्चसंस्काराः ।

४६२ अष्टाचत्वारिंशद्गौत्तमस्य ।

४६३ षोडश स्मार्तानाम् ।

४६४ पञ्चविंशद्वा ।

४६५ दशान्येकेषाम् ।

४६६ विवाहान्ताः ।

४६७ स्मशानान्ताः केषांचित् ।

४६८ वानप्रस्थसंन्यासदीक्षे अपि ।

४६९ स्त्रीणामपि केचित् ।

४७० शूद्राणां कतिचिच्च ।

४७१ निषादस्यैक एव विवाहः ।

४७२ गुणाधानार्थम् ।

४७३ दोषनिवारणार्थञ्च ।

४७४ बैजगार्भैनोवारणार्थमपि ।

४७५ सत्वोद्बोधनमतः क्रमेण ।

४७६ उपशमश्चरजस्तमसोः ।

४७७ स्थैर्यथोचितं देहादीनां विकासः ।

४७८ चौलपर्यन्तै मुख्यशः ।

४७९ तेन विनयनयोग्यता च ।

४८० जीविकापरीक्षणमपि ।

४८१ आचारशिक्षारम्भश्च ।

४८२ द्विजत्वसंभावनापि ।

४८३ परमुपनयनमनुद्विजत्वम् ।

४८४ तत्स्थैर्यमाचारात् ।

४८५ आचारस्तु स्वस्ववर्णाश्रमोचितं कर्मैव ।

४८६ चारित्र्यादीनामत्रसमासः ।

४८७ तत्यागे पातित्यम् ।

४८८ अविहितकरणादपि ।

४८९ व्रात्यादिसंसर्गाच्च ।

४९० तच्छुद्धिस्तु प्रायश्चित्तेन ।

४९१ पश्चात्तापपूर्वश्चेत् ।

४९२ शास्त्रात् ।

४९३ पर्षदुक्तं वा ।

४९४ देशादिविचारणापूर्वम् ।

४९५ प्रायश्चित्ततन्त्राद्विशेषः ।

४९६ ब्रह्मचर्यमुपनयनात् ।

४९७ विद्याध्ययनञ्च ।

४९८ तेन सामर्थ्योत्पादानं स्वाश्रयित्वसंपादनाय ।

४९९ व्यवहारनैपुण्यं च ।

५०० स्वकर्तव्यदार्ढ्यं हि ।

५०१ आत्मानात्मतत्त्वबोधं विना नैतत् ।

५०२ तदर्थं व्रताचरणम् ।

५०३ प्रतिवेदं तानि भिन्नानि ।

५०४ अनुष्ठेयान्येव ।

५०५ न तेनाविना वेदसंबोधः ।

५०६ साङ्गं चतुर्णा वेदानामध्ययनं श्रुतेः ।

५०७ त्रयाणां वा धीशक्तिदौर्बल्यात् ।

५०८ द्वयोरपि च ।

५०९ एकस्यात्यावश्यकम् ।

५१० चतुर्दशविद्यानां वा ।

५११ अष्टादशानां वा ।

५१२ नारदोक्तानां वा ।

५१३ सप्रयोगं सरहस्यञ्च ।

५१४ गोदानमध्ययनान्ते ।

५१५ ततः समावर्तनमाचार्यकुलात् ।

५१६ न तत्पूर्वम् ।

५१७ यावदध्ययनं ब्रह्मचर्यम् ।

५१८ अध्ययनाशक्तेरिच्छया नैष्ठिकम् ।

५१९ गुर्वाधीनोयतस्ततः प्रसादः ।

५२० तदङ्गतयावर्तनात् ।

५२१ सवितुरग्नेः सायं प्रातरुपासनम् ।

५२२ गुरूणां च परिचर्या ।

५२३ अभेदभावनया त्रयाणां चात्मना श्रुतेः ।

५२४ एवमुपासनाप्रवेशः ।

५२५ तत इष्टादेरभेदानुभवो गुणाविर्भावश्चयथा-यथम् ।

५२६ अनुभवयोग्यता च धियः ।

५२७ अन्तर्यामिन आदेशश्रवणम् ।

५२८ सत्यस्य प्रकाशः ।

५२९ शिक्षया दोषतिरोधानम् ।

५३० तैः स्वयोग्यतायानिश्चयः ।

५३१ समनुवृत्तेः ।

५३२ शमादि शौर्यादि च ब्रह्मक्षत्रयोर्लक्षणे यथा-संख्यम् ।

५३३ धर्माचरणायैव गार्हस्थ्यप्रवेशः ।

५३४ यथावर्णपत्नीपरिग्रहोगृहस्वीकारश्चतत्र ।

५३५ अन्यायोपयोगो तदर्थम् ।

५३६ कामायापि ।

५३७ यथाशास्त्रम् ।

५३८ अर्थाय च ।

५३९ अविरोधेनैव सर्वत्र परस्परम् ।

५४० सुप्रजोत्पादनं वंशवृद्धयनुशासना-
नुसारम् ।

५४१ नित्यानां समनुष्ठानं तस्य ।

५४२ संध्यादीनि च श्रुतेः ।

५४३ नैमित्तिकानाञ्च ।

५४४ संस्कारश्चयथायथम् ।

५४५ पाकहविर्यज्ञसोमसंस्था अपि ।

५४६ तैरपि संस्क्रियते ।

५४७ सत्काम्यानि ।

५४८ आभ्युदयिकार्थान्येव ।

५४९ परानर्थकराणि न चेत् ।

५५० विविधा यज्ञाः ।

५५१ अत्र सफलाःस रहस्याः ।

५५२ तथापि जघन्यान्येव श्रुतेः ।

५५३ पुनःसंधामार्थकानि प्रायश्चित्तानि धर्मलोपे ।

५५४ व्रतादीनि ।

५५५ तान्यपि कर्तव्यानि श्रूयन्ते ।

५५६ तत्समनुष्ठानादात्मगुणोदयः ।

५५७ अध्यात्मभूमिजयश्च ।

५५८ शक्तिविकासश्च ।

५५९ विद्यासामर्थ्यलाभश्च ।

५६० निश्चयबलंच ।

५६१ दयादिरात्मगुणः ।

५६२ आत्मप्रकाशकत्वान्मलापाकरणेन च ।

५६३ मुक्त्युपयोगित्वाच्च ।

५६४ आपदि तु संक्षेपेण यथावकाशम् ।

५६५ यथाशक्ति श्रद्धयाऽऽदरेण च ।

५६६ यथाविधि संध्यावन्दनादपि तु ।

५६७ सावित्रीजपमात्राच्च ।

५६८ अर्थभावनापूर्वं सस्वरमुच्चारणं च जपः ।

५६९ अर्थानुवर्तनं चेत्फलदं शीघ्रम् ।

५७० स्वरज्ञानमूलमर्थज्ञानम् ।

५७१ भावना तन्मूला ।

५७२ नान्यमनस्कश्चेदपिसत्वं प्रविशति कालेनाऽन्यमनस्यपि ।

५७३ ततो ह्यर्थावबोधो भावनाज्ञानमनुवर्तनमीशानुभवश्च क्रमेण ।

५७४ याथातथ्यतोऽर्थान् पश्यति ततः ।

५७५ उपदिशति च छन्दतः ।

५७६ पदं गृह्णाति श्रोतृमनसि तदुपदेशः ।

५७७ केवलं महायज्ञानुष्ठानाच्चापि हि ।

५७८ देवर्षिपितृनृभूतसेवा च ततः ।

५७९ समाजरक्षा चाश्रमिसत्कारात् ।

५८० सहानुभूतिर्दया चावश्यकी तत्र ।

५८१ भूतमात्रं प्रति च ।

५८२ वृत्तेर्विनिमयोऽपि ।

५८३ अनिन्द्या हीना च न ।

५८४ अनन्तर वर्णाविहिता यावच्छक्यम् ।

५८५ स्वस्मादुच्चवर्णाविहिता वा ।

५८६ यावदापत् ।

५८७ यावत्सामर्थ्यलाभो वा ।

५८८ ततस्तस्त्यागः समुचितः ।

५८९ नोचेद्धानिरेव ।

५९० निकृष्टसाम्यापत्तेः ।

५९१ स्वधर्मत्यागात् ।

५९२ परधर्मानुसरणात् ।

५९३ अतो विगुणोऽपि स्वधर्मः श्रेयान् ।

५९४ ततः समत्वाप्ति क्रमशः ।

५९५ स्त्रीपुत्रादिष्वभेदश्च ।

५९६ आत्मरक्षैव परो धर्मः सर्वत्र ।

५९७ वर्णाश्रमधर्माणांमूलभूतश्च ।

५९८ सर्वासामपि नीतिनामाधारभूतः ।

५९९ यावदभेदानुभव आत्मत्वम् ।

६०० समत्वञ्च ।

६०१ निर्दोषत्वञ्चापि ।

६०२ ततस्तत्र सुखप्रतीतिः सार्वजनीना ।

६०३ अनुभूतिरेव सत्यम् ।

६०४ सत्यान्नास्ति परो धर्मः ।

६०५ नानृतात्पातकं परम् ।

६०६ एतदनुरोधेन कर्मयोगानुष्ठानम् ।

६०७ गीताममानुसरणेन च ।

६०८ समाजस्याभिवृद्धिस्ततः ।

६०९ समाजशासनानुवर्तनात् ।

६१० आत्मतत्त्वजिज्ञासोदयश्च ।

६११ तत्पूर्त्यै वने प्रस्थानम् ।

६१२ विविधाश्चात्र दीक्षा अनुष्ठेयाः ।

६१३ औपनिषद्यो मनोः ।

६१४ वैखानसोक्ताश्च यथाधिकारम् ।

६१५ ब्राह्मण कल्पोक्ता अपि ।

६१६ श्रौतानुसारितन्त्रोक्ताः केषाञ्चित् ।

६१७ ददाति क्षिणोति च दिव्यभावं पापसंचयञ्च ।

६१८ हिंसादीनि पापकर्माणि ।

६१९ अशुभवासनास्तन्मूलानि ।

६२० आसुरीसंपच्च फलम् ।

६२१ अहिंसादीनि शुभकर्माणि ।

६२२ दैवीसंपच्च फलम् ।

६२३ शुभवासना साधनम् ।

६२४ श्रद्धाविवेकपूर्वं गुणाभेदज्ञानानुकूलममानित्वाद्यर्जनं क्रमः ।

६२५ दिव्यभावः स एव ।

६२६ ततो ह्यन्वीक्षा जायते ।

६२७ तदभ्यासाच्चात्मसाक्षात्कारः ।

६२८ कर्मफलत्यागात्सः ।

६२९ ध्यानात् ।

६३० ज्ञानात् ।

६३१ चित्तसमाधानात् ।

६३२ तस्मिन्नेव मनःस्थापनात् ।

६३३ एवमनन्ययोगादपि ।

६३४ मंत्रदर्शनमपि ह्यतोऽत्रैव ।

६३५ आस्यभोगवताञ्च तत्सिद्धिः ।

६३६ सिद्धिःसंशयनिवृत्तिर्हृदयग्रन्थिभेदश्च ।

६३७ ततो गोत्रप्रवर्तनम् ।

६३८ प्रवराख्यानं वा ।

६३९ कुलपतित्वञ्च ।

६४० आचार्यकुलनिर्वहणमपि ।

६४१ उपाध्यायाऽध्यापकत्वे तदभावे ।

६४२ तत्र द्विजबटूनां शिक्षा चोपयुक्ता ।

६४३ अभ्युदयकारिका ।

६४४ वृत्युपयोगिनी ।

६४५ धीविकासिनी ।

६४६ सामर्थ्याधायिका ।

६४७ पारतन्त्र्यापहारिणी ।

६४८ लौकिकेषूपयोगिनी ।

६४९ स्वातन्त्र्याय च ।

६५० स्वाराज्यनिष्ठा ।

६५१ राजभक्तियुक्ता ।

६५२ तदर्थं प्राणादिसमर्पयित्री ।

६५३ चतुर्वर्गदात्र्येव ।

६५४ बृहस्पतिसूक्तानुसारेण ।

६५५ शूद्राणामपीति नीतिविदः ।

६५६ निषादानामपी त्येके ।

६५७ राजपुत्राणां राजधर्मो विशेषतः ।

६५८ व्यवहारदर्शननैपुण्यञ्च ।

६५६ राज्याङ्गोपयोगविधिः ।

६६० नीतिः षड्गुणा ।

६६१ बार्हस्पत्यादिकाः ।

६६२ ततःसार्वात्म्यानुभूतिश्चान्ते ।

६६३ समदृग्भूत्वा सर्वत्र परिव्रजति ततः ।

६६४ स एव श्रेष्ठः कृतकृत्यश्च ।

६६५ अतः फलं संन्यासः ।

६६६ एषणात्रयराहित्यात् ।

६६७ निर्दोषित्वञ्चापि ।

६६८ परमं साम्यञ्चोपैति परस्य ।

६६९ तस्य चातुर्वर्ण्ये भैक्ष्यचर्य्या ।

६७० तस्मिन्शूद्रविट्क्षत्रब्रह्मत्वादिगुणा एकत्राव-
स्थिता विराजीव ।

६७१ अतएव न वर्णी नावर्णी ।

६७२ नाश्रमी नानाश्रमी ।

६७३ अत्याश्रमीत्युच्यते ।

६७४ आचार्य्यःखलु यथार्थः स एव ।

६७५ जगद्गुरुरपि ।

६७६ तस्मिन्सर्वदेवतागुणाश्च श्रुतेः ।

६७७ अनुभवादपि ।

६७८ तत एव फलं यथोक्तम् ।

६७९ वेदविच्च ।

६८० शिष्टतमश्च ।

६८१ ब्रह्मविद्योपदेशोऽस्यमुख्यं कर्म ।

६८२ लोकसंग्रहायवर्णाश्रमधर्मादि ।

६८३ न लोकरञ्जनम् ।

६८४ लोकानुसरणं वा ।

६८५ तल्लोकैषणैव ।

६८६ अथ लोकसंग्रहः ।

६८७ असक्तः कर्मकर्ता श्रीकृष्णवत् ।

६८८ अनुकरणस्वभावत्वाल्लोकस्य बालवत् ।

६८९ कर्मणि युक्तश्च वसिष्ठवत् ।

६९० वेदाध्यापनं व्यासवत् ।

६९१ स्मृतिसंस्कारः पराशरवत् ।

६९२ याज्ञवल्क्यवद्वा ।

६९३ प्रजासंबोधनं मनुवत् ।

६९४ योगज्ञानभक्तिसञ्जीवनञ्च शङ्करवत् ।

६९५ वर्णाश्रमधर्मसंरक्षणमुज्जीवनञ्च काले विष्णुवत् ।

६९६ सर्वचित्त्वादेवास्यशास्त्रस्यग्रथनमग्निवेशवत् ।

६९७ संशोधनं संस्करणञ्च चरकवद्वा ।

६९८ संग्रहणं च व्याडिवत् ।

६९९ व्याख्यानञ्च पतञ्जलिवत् ।

७०० यथावदुपदेष्टृत्वं भरतवत्

७०१ वर्णाश्रममर्मरक्षा श्वेतकेतुवत् ।

७०२ पतितानुग्रहश्च विश्वामित्रवत् ।

७०३ धर्मोपदेशो भीष्मवत् ।

७०४ सदःस्थापना शौनकवत् ।

७०५ पदार्थदोहःपृथुवत् ।

७०६ पौरोहित्यं बृहस्पतिवत् ।

७०७ समाजभैषज्यं ब्रह्मवत् ।

७०८ राष्ट्रगुप्तिश्चाणक्यवत् ।

७०९ अग्रणीरग्निवत् ।

७१० अग्निर्ऋषिरिति श्रुतेः ।

७११ समाजोत्पादनं हिरण्यगर्भवत् ।

७१२ उपतापे चिकित्सा विष्णुवत्

७१३ समयोचितकृतिरिंद्रवत् ।

७१४ प्रजोपवनरक्षणं मालाकारवत् ।

७१५ कृषिकारवद्वा ।

७१६ औषधिरक्षा सोमवत् ।

७१७ वित्तगुप्तिः कुबेरवत् ।

७१८ अपथ्यहरणं मातृवत् ।

७१९ हितकृत्त्वं धरित्रीवत् ।

७२० लोकवेदनैपुण्यं पाराशर्य्यवत् ।

७२१ सर्वभूतहितेरतत्वादेवाऽस्य धर्मचक्रप्रवर्तकत्वं चाऽतः ।

७२२ स्वार्थत्यागेन च श्रीकृष्णादिवत् ।

७२३ बुद्धादिवद्वा ।

७२४ दोषं परिज्ञाय हानञ्चरामवत् ।

७२५ तत्रापि धर्मोपदेशः सर्वस्मो बुद्धवत् ।

७२६ दया क्षमा चाप्रतिमा वीरवत् ।

७२७ समाजसंग्रथनं मूषवत् ।

७२८ अज्ञवशीकृतृत्वं महामदवत् ।
७२९ सत्यार्थं देहत्यागोऽपि क्रीष्टवत् ।
७३० लोकहितं जरदुष्ट्रवत् ।
७३१ यथोदितवर्तनं गौराङ्गवत् ।
७३२ ईशसेवा रामानुजवत् ।
७३३ स्वमताग्रहो मध्वत् ।
७३४ शुद्धश्चेद्योग्यः ।
७३५ तत्रापि सत्यमेव मदीयमिति ।
७३६ न मदीयमिति सत्यम् ।
७३७ यज्ञमयं जगच्चक्रम् ।
७३८ अतोयज्ञः प्रथमो धर्मः ।
७३९ स्वाभाविक्यैव चक्रप्रवृत्तिः ।
७४० तदनुसरणं यथायथम् ।
७४१ उत्पथगानां पथिस्थापनम् ।
७४२ स्वधर्मोद्बोधनं यथाप्रसङ्गम् ।
७४३ परधर्मोच्च्यावनञ्च ।
७४४ साधुपरित्राणम् ।
७४५ अभय प्रदानम् ।

७४६ दुष्कृतविनाशः ।

७४७ चारित्रशुद्धिः ।

७४८ धर्मग्लान्यधर्माभ्युत्थाननिरासश्च ।

७४९ धर्मव्यवस्थापनमपि संशये ।

७५० धर्मयोर्विरोधे निर्णयो यथाशास्त्रम् ।

७५१ नोच्छास्त्रम् ।

७५२ शिष्टमैतिह्यात् ।

७५३ तेन यज्ञमयः पुरुषो यथार्थः ।

७५४ अतोऽर्घ्यः सैव सर्वहितकृत्त्वात् ।

७५५ आत्यश्रुतेः ।

७५६ तस्यैव साम्यानुभवः पूर्णः जैगीषव्यवत् ।

७५७ ज्ञानञ्चश्वेताश्वतरादिवत् ।

७५८ अमानित्वादिकं तल्लक्षणम् ।

७५९ तदानीं जीवन्मुक्तः ।

७६० अन्ते विदेहमुक्तो हि ।

७६१ परमानन्दानुभवेन कार्तार्थ्यमन्तः ।

७६२ सैवपरः पुरुषार्थः ।

७६३ शास्त्रादेवाऽस्यावगतिः ।

७६४ तदङ्गकर्तव्यनिश्चितिः ।

७६५ अतः कर्त्तव्यानि कर्तव्यानि ।

७६६ प्रवृत्तिश्चयथायोग्या ।

७६७ प्रवृत्तौ निवृत्तिः ।

७६८ निवृत्तौ प्रवृत्तिः ।

७६९ स्वार्थान्निवृत्तानामपि परार्थे च ।

७७० तत्साधकानि साधनानि साध्यानि ।

७७१ सिद्धानि संरक्षणीयानि ।

७७२ उपदेष्टव्यानि यथाधिकारम् ।

७७३ श्रद्धां संरक्ष्यैव ।

७७४ तन्मूलं हि सदाचारस्य ।

७७५ उत्साहादीनाञ्च ।

७७६ धर्मानुष्ठानस्यापि ।

७७७ विवेकञ्च ।

७७८ ज्ञानोत्पत्तिरतः ।

७७९ फलप्रदत्वमुभयोः ।

७८० सत्यस्मानुभूतिश्च ।

७८१ साधनाशुद्धेः साध्याशुद्धिः ।

७८२ अन्नजं मनः ।

७८३ वारिजः प्राणः ।

७८४ तेजसो वाक् ।

७८५ तेषां ईशानुग्रहादेः शुद्धिः ।

७८६ ततोयथावज्ज्ञप्तिः ।

७८७ ततः क्रियाः ।

७८८ सत्यस्यानुभूतिश्च ।

७८९ श्रुतियुक्त्यनुभूतीनामैक्यं चेत्सत्यम् ।

७९० तद्दोषराहित्ये साम्ये च ।

७९१ तदभिलष्यम् परमार्थतः पुरुषार्थसाधकत्वात्

७९२ इति शिवम् ।

७९३ ततः साध्यतान्ततः साध्यताम् ।

---

इति पुरुषार्थ मीमांसा समाप्ता ।

